इत्याह मतं दूषयता केशवार्केण पृथगपि द्विगुणे त्रिगुणे सकृत्त्रिगुणमित्यबहूक्तिरियं मत इति विवाहवृन्दावनेऽभि
धायि तद्दुर्गादिमुनिग्रन्थविरोधादसदेवेति बोध्यम्।अथाश्रयगुणकमाह॥ ॥ यः स्वाधीशसुहृत्समार्यधिरिपो
र्वर्गे धृतिश्चेषिलाविश्वाङ्केषुगुणाग्रहे द्विगुणितायोगः क्रमात्तं हरेत्॥ तद्वेषड्वसुगोशुमद्भतिजिनैः
षड्घ्नैश्च वर्गोत्तमस्वांशत्र्यंशगते सदा रसगुणैः स्यादाश्रयाख्यो गुण इति॥ १७॥ योग्रहः स्वाधीश
सुहृत्समार्यधिरिपोर्वर्गे ग्रहादिसप्तवर्गे स्यात्तस्य धृतिरिषिला इत्यादयोऽङ्काः क्रमात्स्थाप्याः।चकारेण वर्गे इत्यनु
षङ्गः स्वादीनां यस्मिन्ग्रहाद्ये वर्गे ग्रहः स्यात्तत्र वर्गे धृत्यादयोऽङ्काः क्रमात्स्थाप्या इत्यर्थः।स्वश्च अधीशश्च सुहृच्च सम
श्च अरिश्च अधिरिपुश्च एषां द्वन्द्वैकत्वं क्लीबता च।उक्तपुंस्कत्वात्पुंवद्रूपम्।धृतिरष्टादश।इषिलाः पञ्चदश।इरा
भूर्वाक्सुराप्सु स्यादिति रान्तेषु पाठाद्रेफान्त एवेराशब्दो न तु लान्त इति कश्चित्।तन्मन्दम्।अस्ति च लान्तोपीलाशब्दः।
भूर्गोवाचस्त्विडा इला इति त्रिकाण्डीस्मरणात्।इला कलत्रे सौम्यस्य धरित्र्यां गवि वाचि चेति मेदिनीकोशाच्च।प्रहृष्ट
पुष्टाखिलगोकुलामिलामिति भास्करोक्तिरप्यनुकूला।विश्वे त्रयोदश।अङ्का नव।इषवः पञ्च।गुणास्त्रय इति।ग्रहे
ग्रहवर्गे धृत्याद्यस्यो द्विगुणिताः स्थाप्याः।यथा स्वगृहे षट्त्रिंशदधिमित्रगृहे त्रिंशदित्यादि तेषां सप्तसु वर्गेषु स्थापितानां

मित्रस्य वा गृहे भवेत् । तत्तदा गृहाङ्कात्पूर्वं गृहवर्गेस्थापिताद्ङ्कात्त्रिषड्भिर्लब्ध्या प्राप्तफलेन स्व आश्रयकः ऊनो युक्तः का
र्यः आश्रय एव आश्रयकः स्वार्थे क प्रत्ययः । आश्रयगुणक इत्यर्थः । चेद्वर्गोत्तमपूर्वगः सन्नरिष्टभे शत्रुराशौ मित्रराशौ
वा स्यात्तदा गृहाङ्काद्भिन्नवर्गैश्चतुर्नवत्या आप्त्या लब्धेन ऊनयुक्तः कार्यः । एतदुक्तं भवति । मित्राधिमित्रगेहयोर्गृहाङ्क
त्वहरेण फलं पुरानीताश्रयगुणे युक्तं कार्यम् । अधिशत्रुशत्रुगृहयोस्तु हीनं कार्यमिति । अत्रोपपत्तिः । वर्गोत्तमस्वरा
शि द्रेष्काणनवांशके सकृद्द्विगुणमिति लघुजातकोक्तेर्वर्गोत्तमादौ द्विगुणत्वमुपपन्नम् । रिपुराशौ त्रिभागो नमि
ति सारावल्यामभिहितत्वाच्छत्रुराशौ त्र्यंशहानिः । केंद्रघ्ने रूपे पुलवाधनर्णमेकस्य भागा अधिकोनकाश्चेदिति पाटी
सूत्रेण तलस्य हारेणेत्यादिना वा समच्छेदसूत्रेण वा सिद्धेन त्र्यंशोनरूपगुणेन त्र्यंशहानिरेव भवतीति त्र्यंशोनं रूपं
$\frac{२}{३}$ गुणः । अधिशत्रुराशौ अर्द्धं शत्रुत्वस्याधिक्यात्स्वार्द्धसहिततृतीयांशस्य प्रागुक्तसूत्रैः सिद्धस्यार्द्धात्मकस्य ह्रासः अ
यं रूपाच्च्युतो जातोऽधिशत्रुराशावर्द्धमितो गुणः $\frac{१}{२}$ एवं मित्रराशौ युक्त्या तृतीयांशस्य वृद्धिः । तलस्य हारेणेत्यादिना सि
द्धेन त्र्यंशाधिकरूपेण गुणेन त्र्यंशोपचय एव भवतीति सत्र्यंशं रूपं $\frac{४}{३}$ गुणः । एवमधिमित्रताया आधिक्यात्स्वार्द्धं सुत
त्र्यंशस्य पूर्वसूत्रेण सिद्धस्यार्द्धात्मकस्य वृद्धिः । इयं रूपान्विता जातोऽधिमित्रराशौ गुणः $\frac{३}{२}$ समगृहे समोऽर्द्धमित्र मर्द्धश

मङ्गानांयोगः कार्यः।तंयोगंतद्धेतेषांस्वाधीष्टादीनांभेरा शौग्रहे सतिक्रमात्षड्वुंखित्यादिभिरङ्कैः षड्घ्नैः षड्गुणितैः हरे
त्।भजेत्।गणकइतिशेषः।षट्प्रसिद्धाः वसवोष्टौ गावोनव अंशुमन्तोद्वादश धृतयोष्टादश जिनाश्चतुर्विंशतिः ए
भिःषड्घ्नैरङ्कैस्तंयोगंभजेदित्यर्थः।क्रमादिति काकाक्षिगोलकन्यायादुभयत्रसंबध्यते।वर्गोत्तमस्वांशत्र्यंशगतेग्रहे
सदारसगुणैः षट्त्रिंशतातंयोगंहरेत्।अंशाश्चत्र्यंशाश्चअंशत्र्यंशाः।स्वस्मअंशत्र्यंशाःस्वांशत्र्यंशाःवर्गोत्तमाश्चस्वां
शत्र्यंशाश्चवर्गोत्तमस्वांशत्र्यंशाः।यत्रराशौग्रहस्तस्यैवराशेर्नवमांशे चेद्भवेत्तदासनवमांशोवर्गोत्तमांशः।तदुक्तम्। रा
शियेः स्यात्सोपिनन्दांशकश्चेदुक्तस्तस्मिन्नेववर्गोत्तमांशइति।सचकस्मिन्राशौकतमोभवति।तदुक्तंबृहज्जातके।
वर्गोत्तमाश्चरगृहादिषुपूर्वमध्यपर्यन्तगाः शुभफलानवभागसंज्ञाइति।स्वांशः स्वराशिनवमांशः स्वत्र्यंशः स्वराशि
द्रेष्काणः तेषुवर्गोत्तमाद्येषुगतेवर्तमानेग्रहेषट्त्रिंशताभजेत् नतुप्रोक्तहरेणेत्यर्थः।एवंहरेणभजनेयल्लभ्यतेरूपा
दिसआश्रयनामागुणोभवेत्॥अथैवंसिद्धस्याश्रयगुणकस्यकदाचित्संस्कारमाह॥ ॥ चेद्भगोत्तमपूर्वगोध्यरिसु
हृद्गेतद्वृहाङ्कात्त्रिषड्लब्ध्योनोगुगरिष्टभेब्धिनवकाघ्यास्वेसमेकेवलः॥कार्यस्त्वाश्रयकःसः ॥ ॥
चेद्भहोवर्गोत्तमपूर्वगः वर्गोत्तमनवमांशस्वनवमांशस्वद्रेष्काणान्यतरस्मिन्वर्त्तमानःसन्नध्यरिसुहृद्गेअधिरिपोरधि

ग्रहगुणयोरनयो २४/३ रन्तरार्द्धेऽस्मिन् १/३ स्वग्रहगुणाद्दूने मित्रग्रहगुणे वा युक्ते जातोऽधिमित्रसंबन्धिनि सप्तवर्गे गुणः
५/३ मित्रसंबन्धिवृद्धिर्निजार्द्धसहिताऽधिमित्रसंबन्धिवृद्धिरत्र विलोमविधिना तृतीयांशेनाधिमित्रसंबंधिवृद्धिर्मित्रसं
बंधिवृद्धिर्भवतीत्यधिमित्रसंबन्धिवृद्धिरियं २/३ स्वतृतीयांशेनानेन २/९ ऊनाजाता मित्रसंबन्धिवृद्धि ४/९ रनया प्राग्वद्गु
णोऽयं १३/९ मित्रसंबन्धिनि सप्तवर्गे समसंबन्धिनि तु रूपमेव। मित्राधिमित्रयोर्यावती वृद्धिस्तावत्येवामित्राध्यमित्रयो
र्हानिरिति जातो शत्रुसंबन्धिनि अधिशत्रुसंबन्धिनि सप्तवर्गे क्रमाद्गुणौ ५/९।१/३। स्वसंबन्धिनि द्वितयं गुणोऽस्त्येव। एवं सि
द्धे राश्यादिसप्तस्थानस्य गुणाः एभिर्गुणकैर्गुणनीयाद् युपपन्नम्। अत एवोक्तम्। गृहादिके वर्गगणे स्वकीये द्विको गु
णस्त्र्यंशविवर्जितः सः॥ अधीष्टभे मित्रगृहे नवांशा विश्वे च रूपं च समस्य गेहे॥१॥ नवांशकाः पञ्च विरोधिराशौ गुणास्त्र
काः स्यादधिवैरिणो भे॥ पूर्वं भपूर्वा गुणका य उक्ता वर्गेषु सप्तस्विह गुण्यसंज्ञाः॥२॥ गुण्या गुणैः स्वैरधिकारलब्धै रु
क्तैर्गुणः स्यादथ मिश्रितैस्तैः। स्मृतो बुधै राश्रयसंज्ञितोऽयमिति॥ यत्र वर्गोत्तमस्वनवमांशस्वद्रेष्काणान्यतस्वशान्मुख्योद्वि
गुणः प्राप्तस्तत्र शत्रुक्षेत्रे त्र्यंशमित्यादिना जातकवाक्येन शत्रुभे हानिः परिणामेन गुणात्मिकार्थान्मित्रभादिषु वृद्धिरपि प्रा
प्ता तदत्रैकाश्रयगुणसिद्ध्यर्थं संपूर्णो द्विमितगुणे यथा प्राप्तां हानिं वृद्धिं वा विधाय पश्चादस्य राश्यादिसप्तस्थानस्यापना।

त्रुश्चेतिपक्षेऽर्द्धमित्रत्वाद्यावतीवृद्धिरर्द्धशत्रुत्वात्तावतीहानिरितिहानिवृद्ध्योरभावाद्रूपंगुणः१समोनमित्रंनशत्रुरिति
पक्षेपिनवृद्धिर्नापिहानिः।अतोरूपमेवगुणइतियुक्तम्।लघुजातकेसारावल्यामप्यंशाःसुषिशत्रुराशौवक्रंविहायहा
निःस्यादितिनोक्तम्॥क्वचिदुक्तमप्यस्ति।तस्मात्तेभेदेत्रपूर्वमतमेवाङ्गीकृतमितिप्राञ्चः।अथशत्रुमित्रादिराशौस्वनवांशे
स्वद्रेष्काणेवास्थितेस्वराशौशत्रुमित्रादीनांनवांशेद्रेष्काणेवास्थितेग्रहेसामान्यप्राप्तेगुणेराशिनवांशद्रेष्काणकृततार
तम्याद्वैलक्षण्यंयुक्तमेवंहोरादितारतम्यादपि।समग्रएवगुणेसप्तवर्गकृततारतम्यविधिस्वीकारेत्यन्तायुक्ताबहुव
र्गेणैवस्यादतःकारणाद्विभक्तेएकस्मिन्गुणेराश्यादिस्थानेषुविभागेनावस्थानमागतम्।इहहोरादयःषट्समाएवरा
शेस्तुहोरादिवर्गाद्द्विगुणंगृहमितियवनवाक्येद्वैगुण्यमस्तीत्यंशेवर्गास्तेनाष्टभक्तोगुणोहोरादिवर्गेषु।अयमष्टभक्तो
द्विगुणश्चतुर्भक्तगुणात्मकोगुणोराशिस्थानेस्यादितिसिद्धम्।अतःसम्यगुक्तंश्रीपतिभिः।वर्गोत्तमेस्वभवनेस्वनवां
शकेचस्वत्र्यंशकेचगुणकोद्वितयंनिरुक्तः॥अध्यर्द्धरूपमधिमित्रगृहेसुहृद्भेसत्र्यंशकंसमगृहेखलुरूपमेव॥१॥
त्र्यंशोनितंरिपुगृहेध्यरिभेदलंस्यादेभ्योगुणोभवतियःखलुकश्चिदेकः॥वेदोद्धृतःसभगुणोगणकैर्निरुक्तोहोरादिव
र्गगुणकस्तुभवेत्तदर्द्धमिति॥२॥अथाधिमित्रस्वस्वमित्राभ्यांक्रमादर्द्धन्यूनत्वाद्वीधिकत्वमितिपूर्वयुक्त्यास्वगृहमित्र

द्विविधिरितिप्राप्तौ सत्यामुच्यते। इयं हानिर्वृद्धिर्वा परिणामेन गुणात्मिकास्तीति राशिवशाद्वर्गोत्तमादित्रिकान्यत
मवशादत्र गुणद्वये प्राप्ते आचार्यकत्वं तु बहुघ्नतायामेकं तु यद्भूरि तदेव कार्यमिति वाक्येन पुनः सकृद्गुणकस्य नि
यमनाद्धानिवृद्ध्यात्मकगुणकस्य बाधः प्राप्तः जातके हानिवृद्धित्वपुरस्कारेणोक्तत्वाद्बाधोपि युक्तस्तदबाधोबा
धश्च यथा स्यात्तथा प्राप्तेऽत्र राशिवशाद्धानिवृद्धिः प्राप्तास्तीति राशिस्थानस्य राशिगुणमात्रे नियोज्या। राशिवशाद्धानि
वृद्धिस्तु राशिस्थानस्य राशिगुणमात्रे होरादिवशाद्धोरादिस्थानस्य होरादिगुणेषु तारतम्यसिद्धसप्तवर्गगुणकल
क्षणानियुक्तेवास्ति। एवमबाधः सार्थकः। बाधस्तु राशिगुणातिरिक्तहोरादिस्थगुणेषु सार्थकः। ततो गुणत्वेन प
रिणतया हानिवृद्ध्या राशिस्थराशिगुणं गुणयित्वा पुनरावश्यकत्वेन तारतम्यप्राप्तसार्वदिकगुणैर्गुणनमिति सिद्ध
म्। स्वराशिस्थे वर्गोत्तमादित्रिकान्यतमस्थे च ग्रहे राशिवशाद्वर्गोत्तमादिवशादपि द्विमितगुणप्राप्तौ सकृद्गुणनमि
ति वाक्येनैकस्यैव गुणकस्य नियमनात् परद्विगुणस्य सर्वथा बाध एव तदिहनैव पुनर्गुणनमिति बोध्यम्। अथैवं
राशिस्थानस्थगुणमात्रे पुनरधिमित्रादिगुणकापेक्षायां प्रथमगुणकैरपरगुणकैर्वा गुणनीयमिति संदेहादेकतर
पक्षानवलम्बियुक्त्या गुणकान्तराणि साध्यन्ते। यथा प्रथमोधिमित्रगुणः ३ द्वितीयः ५ अत्र यद्गुणयोरनयोरेका

कारत्ताभविष्यत्तदान्यतरेणैवचरितार्थताजातास्यादिदानींत्वनयोरेकाकारतायुक्त्या योगार्द्धे विश्रान्तेतिक्रमिकयोरन
योर्योगार्द्धं १९/१२ गुणोयुक्तः। अन्यच्च। प्रथममित्रगुणास्वथमोऽधिमित्रगुणः सिद्धो द्वितीयसिद्धौजातायामधिमित्रसं
बन्धिवृद्धिस्तृतीयांशोनामित्रसंबन्धिवृद्धिरित्यधिमित्रवृद्धेस्तृतीयांशेमित्रगुणेयोजितेसत्यधिमित्रगुणोभवतीतियु
क्त्याधिमित्रसंबंधिवृद्धेरस्या ३/४ स्तृतीयांशो ३/४ यद्यधिमित्रगुणानपेक्षेप्रथममित्रगुणेस्मिन्नेव ५/४ योज्यतेतद्यम
प्यपरोधिमित्रगुणोयुज्यते १५/४। एवंपुनरपिगुणद्वयेसंदेहतादवस्थ्यादनयो १९/१२। १५/४ र्योगार्द्धंसूक्ष्मोयमेकोधिमित्रगुणः
सिद्धः। अत्र ११३/७२ हारांशयोर्द्विसप्ततिसप्तमांशेन ७२ अपवर्तेकृतेलब्धाहरस्थानेसप्त ७ अंशस्थानेस्वल्पान्तरमुपे
क्ष्यप्राप्ताएकादश। एवमयंगुणोऽधिमित्रराशौ ११/७ अस्यवृद्ध्या ४/७ स्वत्र्यंशोनया २०/२१ प्राग्वदयंमित्रगुणः २९/२१ सम
गुणोरूपमेव १ मित्राधिमित्रयोर्यावतीवृद्धिस्तावत्येवामित्राध्यमित्रयोर्हानिरितिशत्रुगृहगुणा १३/२१ धिशत्रुगुणो
३/७ अतः सप्तरूपंश्रीपत्याचार्यैः। नगांशकारुद्रमिताअधीष्टराशौसुहृद्भेश्वसनिमूर्च्छनांशाः। नवाश्विनोरूपमुदासराशौ
कुद्व्यंशकाविश्वमितादिषड्भे॥ त्रयोनगांशाह्यधिशत्रुराशावेतेभसंज्ञानिजराशिवर्जम्॥ वर्गोत्तमात्मीयनवांशदृक्कस्थि
तेग्रहेतुद्वितयंगुणःस्यात्॥ एतैरधीष्टादिगुणैर्निहन्याद्दृष्टीरितंराशिगुणंपुनस्तमिति॥ इत्याश्रयगुणोपपत्तिः सुन्दरमि

श्रोदिता॥प्रकृतमनुसरामः॥स्वगृहेगुणकः २ वेदोद्धृतःसभगुणोगणकैर्निरुक्तोहोरादिवर्गगुणकस्तुभवेत्तदर्द्धमित्यु
क्तेरयमष्टभक्तो १/४ जातःअयमनन्तरताडकेनद्विकेनगुणितोजातःस्वसबन्धिनिहोरादिषड्वर्गेगुणः १/२ अत्रांशहारावष्टा
दशभिर्गुणितौ १८/३६ जातोयंस्वहोरादिषड्वर्गेगुणः।एवमधिमित्रगृहेगुणः ३/२ अष्टभक्तः ३/१६ अनन्तरताडकेन ५/३ गु
णितोजातो १५/४८ धिमित्रसंबन्धिहोरादिषुगुणः।एवंमित्रगेहगुणो ४/३ ष्टभक्तो १/६ नन्तरगुणेन १३/९ गुणितोजातोमि
त्रसंबन्धिनिहोरादिषड्वर्गेगुणः १३/५४ एवंसमगृहगुणोष्टभक्तोऽनन्तरताडकेनगुणितोजातः १/८ एतस्यहरांशयोर्नवभि
र्गुणनेजातोगुणः ९/७२ एवंशत्रुगृहेगुणो २/३ ष्टभक्तो १/१२ नन्तरताडकेन ५/९ गुणितोजातःशत्रुसंबन्धिहोरादिवर्गेगुणः
५/१०८ एवमधिशत्रुगृहगुणो १/२ ष्टभक्तो १/१६ नन्तरताडकेन १/३ गुणितोजातः १/४८।अत्रांशहरयोस्त्रिभिर्गुणनेजातोधि
शत्रुसबन्धिनिहोरादिषड्वर्गेगुणः ३/१४४।एवमेतेगुणाः स्वाधिमित्रादिगृहस्थेग्रहेसतिस्वाधिमित्रादिसंबन्धिहोरादिस्थानीयाआ
गताः।एवमन्यराशावन्यहोरादिस्थेग्रहेतत्तद्गुणकाः स्थाप्याः।राशिगुणस्यार्द्धंहोरादिगुणइतिराशिस्थानेतुद्विगुणाः स्थाप्याः।
पश्चात्तेषांयोगेकृतेआश्रयगुणकोभवतीत्युपपन्नम्।दर्शनम्।
शोयेनस्वसमाधिवैरिसंबन्धिहोरादिगुणानामेवहारांशाः क्रमेण।

| स्व. | अधि | मि. | स. | श. | अ. |
|---|---|---|---|---|---|
| १८/३६ | १५/४८ | १३/५४ | ९/७२ | ५/१०८ | ३/१४४ |

ननुनह्यस्तिराजनिदे
शादशनवत्रिभिर्गुण

नीयाअन्येषांतुनहन्तव्याइति तस्मादष्टादशादिभिर्गुणनंव्यर्थम्। नचयावान्नेवाष्टादशानां षड्विंशादंशस्तावदेवरूपस्य
ई मित्यादिफलेविशेषाभावादष्टादशादिभिः स्वादिगुणहारांशगुणनंसार्थकमेवेतिवाच्यम्। गुणान्तरेऽपिसमाङ्केन
हारांशगुणनेफलवैचित्र्यदर्शनादुक्तदोषतादवस्थ्यात्। तस्मादष्टादशादिभिः स्वादिगुणहारांशगुणानांहारां
शगुणनंगौरवान्निष्प्रयोजनत्वाच्चव्यर्थमेव। अस्तुवास्वसमाधिशत्रुगुणकानामेवसमाङ्केनहारांशगुणनम्। परंतु
अष्टादशादिभिरेवहरांशाहन्तव्याइतरैर्नहन्तव्याइदमपिशिष्यबन्धनमात्रम्। किंचमित्रराशौमित्रहोरास्थेग्रहे
यावान्होरास्थानीयोगुण १३ स्तावानेवशत्रुराशावपिमित्रहोरास्थेग्रहेगुणः स्यादित्युक्तंतदप्यसंगतम्। यत
स्तत्रशत्रुराशिमित्रहोराजन्येनगुणान्तरेणभाव्यम्। अन्यथामित्राधिमित्रादिगुणसाधनप्रयासवैयर्थ्यापत्तिः। अपि
च। सप्तवर्गस्यापितानांसर्वेषांगुणकानांयोगः कार्यइत्युक्तं तत्रपृच्छ्यते। किंसर्वेगुणकाः सदृशच्छेदाविसदृश
च्छेदावा। आद्येकिंसार्वत्रिकाः कादाचित्कावा। नाद्यः। सर्वत्रसर्वगुणकानांसमच्छेदत्वस्यबाधितत्वात्। नापरः।
भौमादीनांहोराधिपत्यभावात्पुष्पवतोस्त्रिंशांशाधिपत्याभावाच्चकादाचित्कस्यापिसमच्छेदत्वस्यासंभवात्। नापिच
रमः। असमच्छेदानांयोगस्यायुक्तत्वात्। अन्यथायोगान्तरंतुल्यहरांशकानामितिसिद्धान्तोव्याहन्येत। तस्मात्सप्त

वर्गस्य गुणानामैक्यं कार्यमित्युक्तम्॥ अत्र केचित्। नहि वयं सप्तवर्गस्य गुणकानां समच्छेदत्वं ब्रूमो येन भवदुक्तो दोषः प्रसज्येत। किंतु विसदृशहरा एव गुणास्तेषां समच्छेदान्विधाय योगः कार्य इति वदामस्तेन सर्वं समञ्जसमेवेति। स्यादेतत् समच्छेदविधानेन योगः कार्य इत्याचार्येण यद्युक्तं स्यात्। तस्मात्कथमेतदिति दुस्तरजातकार्णवसंदेहतरङ्ग-सङ्ग-भङ्गि तद्धृदया होरिका मिथः परिभाषन्ते। अत्र ब्रूमः॥ यस्य राशौ ग्रहस्तस्यैव चेद्धोराद्रेष्काणान्यतमवर्गे स्यात्तदा तत्रापि तावानेव गुणको यत्तद्गुणकराशिगुणकयोः समच्छेदत्वाद्योगोपि युक्त एवेत्यत्र न कोपि विवादः। होरास्यगुणापेक्षया भगुणकस्यांशमात्रद्वैगुण्येपि सदृशच्छेदत्वमव्याहतमेवेति हृदयम्। अथान्यराशावन्यहोरादिस्थे ग्रहे त्रैराशिकेन गुणान्तराणि यावत्साध्यन्ते तावत्त एव समानराशिहोराद्युक्तगुणा उत्पद्यन्ते किंतु राशिगुणहरतुल्यहरा अतस्त एव गुणकाः स्थाप्याः समच्छेदत्वाद्योज्याश्चेति सर्वमुपपन्नम्। सप्तवर्गगुणानां समच्छेदत्वे सिद्धे सर्वगुणकांशयोग एकेनैव हरेण भाज्य इति लाघवाद्गुणकांशा एव स्थापिताः पश्चात्तेषां योगो राशिगुणस्य हरेणैव भाज्य इति सम्यगुक्तमाचार्यचरणैः॥ ॥अत्रोदाहरणम्॥ रवेः सप्तवर्गस्वामिचक्रं सप्तवर्गस्य गुणकचक्रं च

अथ

| गृ | हो | द्रे | स | न | द्वा | त्रि |
|---|---|---|---|---|---|---|
| बुधः शत्रुः | चन्द्रः समः | बुधः शत्रुः | भौम अमि | गुरुः सम | भौमः अमिः | बुधः शत्रु |

शत्रुसंबन्धिहोरादिस्थोयं गुणो $\frac{५}{१०८}$ द्विगुणो जातो ग

हसंबन्धिगुणः ९०/१०८। अत्रांशस्थाने दश सन्तीति तेस्यापिताः पश्चात्स्वद्रेष्काणत्रिंशांशयोरपि शत्रुसंबन्धित्वात्तत्रापि स एव गुणा कः
भोज्या इति सुष्ठूक्तं द्रेष्काणत्रिंशांश

| ग | हो | द्रे | स | न | द्वा | त्रि |
|---|---|---|---|---|---|---|
| १० | ९ | ५ | १५ | ९ | १५ | ५ |

५/१०८। समच्छेदत्वात्तद्योगोपि युक्त एवेति न किंचिद्विरुद्धम्। अथ होरास्थानस्थगुणः साध्यते। तत्र समराशिस्थे सति समहोरास्थो गुणः। ६/१२। अपेक्षितस्तु शत्रुराशौ समहोरायां गुण इति शत्रुराशिपरिणामोस्य गुणस्यान्याय्यः। तत्रैत्रैरा शिकम्। यदि रूपचतुर्थांशमिते समग्रहगुणेयं होरास्थानस्थगुणो ६/१२ लभ्यते तदा रूपषडंशमिते शत्रुग्रहगुणके कियानिति। अत्र च्छेदलवं च परिवर्त्येत्यादिना जातोयं गुणः शत्रुराशौ समहोरायाम् ६/१०८। अत्रांशस्थानेन वातोन्यरा शावपि समहोरायां नैवस्याप्याद्युपपन्नम्। हरोपि राशिगुणस्य हरेण तुल्य इति समच्छेदत्वाद्योगोपि युक्त एव। किं च यदि पूर्वं समसंबन्धिहोरास्थो गुणाको न वभिर्नगुण्यते तदा शत्रुराशौ समहोरायां गुणः। १/१२। अस्य पुना राशिगुणेन साकं योगे क्रियमाणे मिथो हराभ्यामित्यनेन समच्छेदलकरणमावश्यकम्। तत्र द्वादशभिरेष्टोत्तरशतेपवर्तितेनव लब्धस्तैरूपद्वादशांशमितगुणकस्य हारांशगुणने जातः स एव गुणः ६/१०८। एवमग्रे समच्छेदलकरणावसरे समग्रहगुणो नवगुणो भविष्यतीति पूर्वमेव महामतिभिराचार्यैर्नवगुणः प्रोक्त इति न कोपि दोष इत्यवगच्छ। एवं स्वाधि

वैरिगुणकयोरपिधृतित्रयाभ्यांगुणनंनानर्थकमित्युदाहरणेनबोध्यम्।अथशत्रुराशावधिमित्रसप्तमांशेगुणोनुपातेन।
यद्येतावति ३ ८ अधिमित्रग्रहगुणोयमधिमित्रसप्तमांशगुण १५ ४८ स्तदाशत्रुग्रहगुणेस्मिन् १ ६ कियानितिच्छेदंलवंचप
रिवर्त्येत्यादिनाजातः १५ १०८ सएवगुणकोराशिगुणस्यहरतुल्यहरोतस्तएवगुणकाःस्थाप्याःपश्चाद्राशिगुणस्यैवह
रेणहरणीयाइतिसर्वंपरिच्छिन्नम्।अथवर्गोत्तमस्थांशाभ्यामागतेग्रहेगुणोद्विमितोवेदोद्धृतोजातोभगुणकोर्द्धमि
तः १ २।यदितत्तद्ग्रहेगुणेतत्तद्धोरादिगुणकोलभ्यतेतदास्मिन्नर्द्धमितेवर्गोत्तमादिगुणेकिमितित्रैराशिकेनगुणान्त
राणिसाध्यन्तेतावन्तएवगुणाःषड्त्रिंशत्तुल्यहराउत्पद्यन्ते।ग्रहस्थानेपिपूर्वप्रकारेणयोगुणकस्तद्धरस्थानेयावत्ष
ड्त्रिंशत्स्थाप्यन्तेतावद्वर्गोत्तमान्यतरवशात्प्राप्तगुणकानन्तरताडकघाततुल्यएवगुणकउत्पद्यते।अतस्तत्राङ्कयोगं
षड्त्रिंशतैवभजेन्नतुप्रोक्तहरेणेत्यपिसाधु।अथवर्गोत्तमादित्रिकान्यतमस्थोग्रहोयद्यधिशत्रुगेहेभवतितदाग्रहगु
णकस्यास्य ९ ३२ त्र्योनगांशाह्यधिशत्रुराशाविस्युक्तेरयंगुणः।३।तत्रगुणनंखण्डाभ्यामपिसंभवतीत्येतस्यखण्डद्व
यंकृतंतत्रैकम् ३।अपरंच ४।तत्रप्रथमखण्डेनगुणनेगुणहरयोस्तुल्यत्वान्नाशेकृतेपूर्वानीतआश्रयगुणको
लब्धः।द्वितीयखण्डेनतुराशिगुणेंशाहतिश्छेदवधेनभक्तेतिभिन्नगुणनरीत्यागुणितेचतुर्भिरपवर्तितेचग्रहाङ्कस्ये

त्वाधनखण्डगुणितत्वादृणगतस्यत्रिषष्टितमोभागोभवतीतिगृहाङ्कःत्रिषष्टिभागोनःपूर्वानीताश्रयगुणकोवास्तव
आश्रयगुणोभवतीत्युपपन्नम्।एवमधिमित्रगृहेगुणः।११/७।अस्यापिखण्डद्वयंविधायगुणनेगृहाङ्कःत्रिषष्ट्यंशाए
वभवतीतितथोक्तम्।परमियांस्तुविशेषः।अत्रसप्तचतुर्मितएकादशानांधनखण्डेकृते ‾‾ त्रिषष्टिभागोयोज्य
इति।अथशत्रुगृहगुणः १३/२१ अयमीदृशःकल्पितः।२१/२१।अनेनपुरानीताश्रयगुणेनगुणनेगुणकभाजकयोःसम
त्वादपगमेकृतेसएवजातः ।गुणकांशस्यानेष्टाधिकागृहीताद्व्यष्टानामेकविंशत्यंशेनगुणितराशिगुणा १०/२६
ल्लब्धंपुरानीताश्रयगुणाच्छोध्यंतत्रषट्त्रिंशदेकविंशतितुल्यहरयोर्घातस्यास्य ७५६ मानत्रैः ८ रपवर्तेकृतेल
ब्धासान्नाचतुर्नवतिः ९४।३० स्वल्पान्तरत्वाच्चतुर्नवतिमेवगृहीत्वागृहाङ्कःचतुर्नवतिभागोनःपूर्वानीताश्रयगुणकःका
र्यइत्युपपन्नम्।अथवर्गोत्तमादित्रिकान्यतरस्थोग्रहोयदिमित्रगृहेभवतितदायंगुणकः।२९/२१।अस्यापिधन
खण्डेकृत्वागृहाङ्कःचतुर्नवतिभागान्वितःपूर्वाश्रयगुणोवास्तवोभवतीतिनिष्पन्नम्।वासनाबोद्धारस्त्वधिरिपु
सुहृद्रे त्रिषड्लब्ध्योनोमित्रारिभेतुचतुर्नवत्यंशयुतोगृहाङ्कःकार्यइतिवदन्तितदतीवतुच्छमित्यवगच्छ।स
मगृहेतुरूपसुदासराशावित्युक्तत्वाद्रूपेणगुणनेविकृतत्वाद्यथास्थितएवगुणकः।स्वराशिस्थेवर्गोत्तमादित्रिका

न्यतमस्थेचग्रहेराशिवशाद्वर्गोत्तमादिवशादपिद्विमितगुणकप्राप्तौसकृद्गुणमितिवाक्येनैकस्यैवगुणकस्यनियम
नादपरद्विगुणसर्वथाबाधएवातःसम्यगुक्तंखेसमेकेवलइति॥इत्याश्रयगुणकोपपत्तिः॥कर्मयोग्यगुणकमा
ह॥ ॥तत्स्फुटहृतेर्मूलंसयोग्योगुणः॥ ॥स्पष्टम्।उपपत्तिःप्रागुक्तैव॥अंशायुर्दायोपयोगिदायांशाना
ह॥ ॥खेटानांचतनोर्लवाःस्वयुगहृच्छेषाद्गृहांशायुषः॥१८॥ ग्रहाणांलग्नस्यचलवाश्चत्वारिंशद्भक्त
शेषाःसन्तोंशायुषोलवाभवन्ति॥अत्रोपपत्तिः॥ग्रहभुक्तनवांशराशितुल्यंबहुसाम्यंसमुपैतिसत्यवाक्यमित्युक्ते
र्मेषनवमांशस्थेग्रहेएकवर्षमायुर्वृषांशस्थेद्वेवर्षेएवंक्रमेणमीनांशेद्वादशवर्षाणीतिनिर्णीतम्।तत्रमेषादेश्च
त्वारिंशदंशान्तेमीनांशान्तोभवतीतिचत्वारिंशदंशैरेकःपरिवर्त्तोलभ्यतेततदिष्टेग्रहलग्नांशैःकतीतिचत्वारिंशद्भ
क्ताग्रहलग्नांशागतपरिवर्ताःस्युःशेषोवर्तमानपरिवर्तस्यगतंभवति।कलानांद्विशत्यै२००कोनवांशस्तत्तुल्या
न्येववर्षाणीतिद्विशतकलाभिरेकंवर्षंतदादायांशपरपर्यायशेषांशकलाभिःकिमिति।वर्षाद्यमंशायुर्भवति।अंत
एववक्ष्यते।दायांशोत्थकलाःखयोग्यगुणकघ्नाःखाभ्रनेत्रोद्धृताइति।अतःसर्वंसयुक्तिकमेव॥अथचक्रार्द्धहानिमा
ह॥ ॥षड्भाल्पेसतिखेचरोनउदयेस्यांशाद्धृतेःखाग्निभिस्त्वेकाल्पेस्यचरखाग्निभाजितलवैःसौम्यो

पै॰म॰
९९

नितेत्वर्द्धितैः। ऊनाभूर्गुणएकभेद्विबहुषुत्वेकस्यबह्वोजसःकार्योस्तद्गुणितास्सदायजलवाश्चक्रार्द्धहा
निस्त्रियम्॥१९॥ खेचरोनउदयेषड्भाल्पेसतिअस्यांशोद्धृतैःखाग्निभिरूनाभूर्गुणःस्यादित्यन्वयः।अयमर्थः।ग्रहो
लग्नाच्छोध्यःशेषंयदिषड्भाधिकंतदानैषाहानिः।यदिचषड्भाश्यल्पंतर्हिअस्यषड्भाल्पस्यखेचरोनोदयस्यराश्यस्त्रिं
शतागुण्याअधःस्थांशयुक्ताअंशाभवेयुस्तेस्त्रिंशद्भाज्यालब्धेनभूरेकःहीनःकार्योगुणकःस्यात्।तुर्विशेषेएकाल्पे
खेचरोनोदयेअस्यखेचरोनोदयस्यखाग्निभिस्त्रिंशताभाजितलवैरूनाभूर्गुणःस्यात्।तुर्विशेषे।सौम्योनितेउदयेशुभ
ग्रहोनेलग्नेकृतेसतिअर्द्धितैरंशोद्धृतैःखाग्निभिरर्द्धितैःखाग्निभाजितलवैर्वीऊनाभूर्गुणःस्यात्।तुर्विशेषेएकभेद्विब
हुष्विद्व्यादिषुग्रहेषुसत्सुबह्वोजसःएकस्यैवगुणःकार्यः।बहुओजोवीर्यंयस्येति बह्वोजास्तस्य।एकराशिस्थानांम
ध्येयोरूपषष्ट्यंशाधिकबली तस्यैवगुणःकार्यइत्यर्थः॥यदातुरूपषष्ट्यंशादिबलसाम्यंस्यात्तदासर्वेषामपिगुणः
कार्यइतिमिश्राःप्राहुः।वस्तुतस्तुनैसर्गिकबलमेतद्बलसाम्येस्मादधिकचिन्तेतिलघुजातकसाराव्ल्याद्युक्तेरेकस्त्वे
कर्क्षगेषेकइतिगर्गोक्तेश्चयस्यनिसर्गबलमधिकंतस्यैवगुणःसाध्यइतिअत्रविषष्ट्यंशस्यातिसूक्ष्मत्वाद्रूपषष्ट्यंश
पर्यन्तेचक्रार्द्धहानिर्भवेत्।गुणकेनदायांशगुणनेपरिणामेहानिरेवभवतीतिभावः॥चक्रार्द्धहानिर्नामचक्रपातार्द्धे

रामः
९९

हानिः। पातो विपरीतस्तद्विपरीतत्वसंबन्धेन पातशब्दस्य विपरीताभिधेये लक्षणा चक्रस्य यद्विपरीतार्द्धं तत्संबन्धिनी
हानिरित्यर्थ इति मिश्राः॥ अत्रोपपत्तिः॥ बृहज्जातके॥ सर्वार्द्धत्रिचरणपञ्चषष्ठभागाः क्षीयन्ते व्ययभवनादसत्सु वाम
म्॥ सत्स्वर्द्धं ह्रसति तथैकराशिगानामेकोंऽशं हरति बलवांस्तथाह सत्यः॥ लग्नाद्द्वादशे राशौ पापग्रहे संपूर्णायुर्हानिरेकाद
शेऽर्द्धा युर्हानिर्दशमे तृतीयांशस्य नवमे चतुर्थांशस्याष्टमे पञ्चमांशस्य सप्तमे राशौ आयुषः षष्ठांशस्य हानिः॥ शुभग्र
हे तु लग्नाद्द्वादशराशौ स्थितेऽर्द्धहानिरेकादशे चरणस्य दशमे षष्ठांशस्येत्यादि। द्वादशे सर्वत्र संपूर्णा हानिर्न युक्ता क्व
चिदेकत्र युक्ता तस्माद्यावति मेषादिभागे लग्नं लग्नाद्द्वादशेऽपि तावत्येव मेषादिभागस्थिते ग्रहे उत्सर्गसिद्धयुक्त्या
त्मकसाम्यात् द्वादशस्थमेषादिसंज्ञव्यावहारिकराशेरवश्यंभावाच्चोक्तवदेकादशराश्यन्तरे लग्नार्वाचीनैकराश्यन्त
रात्मके सर्वो भागो हीयते। सर्वेषु जातकतन्त्रेषु भागपर्यायपदपर्यन्तधावनात् सर्वोऽपि भाग एकरूपहरेणायातीत्ये
करूपं हरः। एवं दशराश्यन्तरे लग्नार्वाचीनद्विराश्यन्तरात्मकेऽर्द्धो भागः क्षीयतेऽर्द्धभागोऽपि द्विरूपहरेण गच्छतीति रू
पद्वयं हरः। एवं क्रमिकनवभान्तरेऽर्वाचीनत्रिभान्तरे त्रिरूपं हरः। अष्टभान्तरेऽर्वाचीनचतुर्भान्तरे चतूरूपं हरः। सप्तभा
न्तरेऽर्वाचीनपञ्चभान्तरे पञ्चकं हरः। लग्नात्षड्भान्तरे षड्रूपं परमो हरः। अर्थादन्तराभावे ह्रासाभावः। तस्माल्लग्नार्वाची

नैकराश्युपचयादेकहरोपचय इति सिद्धम्। अथानुपातः। यदि त्रिंशदंशैरेकरूपं १ हरस्तदेष्टखेचरोनोदयराश्यंशतुल्यलग्नार्वाचीनराश्यंशैः किमिति खेचरोनोदयांशा त्रिंशदंशोहरः इति निष्पन्नम्। अनेन सच्छेदेन हरेणायुर्लवा भाज्या लब्धमायुर्लवेभ्यः शोध्यन्तितत्र छेदं लवं च परिवर्त्य हरस्य शेषः कार्योथ भागहरणे गुणनाविधिश्चेति सूत्रेण हरभक्ता आयुर्लवा जाता आ॰ल ३० अत्रायुर्लवास्त्रिंशता गुणनीयाः खेचरोनोदयांशैर्भाज्या अथवा खेचरोनोदयांशभक्तत्रिंशता गुणनीया इति निष्पन्नम्। तत्र खेचरोनोदयांशभक्तत्रिंशद्गुणा आयुर्लवा आयुर्लवेभ्यः शोध्याः खेचरोनोदयांशभक्तत्रिंशदूनरूपगुणायुर्लवा वा फलं सममेव। तद्यथा। आयुर्लवाः १० खेचरोनोदयांशाः ६० खेचरोनोदयांश ६० भक्त त्रिंशता ३० आयुर्लवा गुणिता लब्धमायुर्लवेभ्यः शोधितं जातम् ५। यद्वा खेचरोनोदयांशभक्तत्रिंशदूनरूपेणानेन ०। ३० आयुर्लवा गुणिताः फलं सममेव जातम्। ५। अतः षड्भाल्पे सति खेचरोनउदयेस्यांशोद्धृतैः खाग्निभिरूनाभूर्गुणः स्यादिति युक्तमुक्तम्। एकाल्पे तु खेचरोनोदये त्रिंशद्गुणायुर्लवेभ्यस्त्रिंशदल्पखेचरोनोदयांशैर्भागे ह्रियमाणे फलमायुर्लवाधिकमायुर्लवेभ्यो न शुद्ध्यतीति व्यस्तत्रैराशिकं कर्त्तुमुचितमतः खाग्निभाजितलवैरूनाभूर्गुण इत्यपि सुष्ठूक्तम्। सत्त्वर्द्धं ह्रसतीत्युक्तेः सौम्यो नितेलग्नेऽर्द्धितैः खेचरोनोदयां

शभक्तत्रिंशद्भिःखाग्निभाजितलवैर्वैर्नाभूर्गुणःस्यादित्यपिनितान्तंकान्तम्।अनेनगुणेनायुरंशागुणनीयाअतस्त
द्गुणिताः खदायजलवाइत्युपपन्नम्।अत्रकेचिद्द्वाववशाच्चक्रार्द्धहानिंकथयन्तिस्मतन्मतमाचा
र्येणनस्वीकृतम्।गर्गसत्याचार्यवराहकल्याणवर्मादिभीराशिपर्यायपर्यन्तंधावनात्।अतोयदुक्तंतत्सर्वंनिरवद्य
म्।पद्धतिप्रकाशेतुचक्रार्द्धहानिगुणःप्रकारान्तरेणमयोक्तः॥एकाल्पकेभद्विगुणांशतुल्यंरसाल्पकेतद्धृतरूप
तुल्यम्।शोध्यंतदूनैकमितोगुणःस्यात्कुभोनितेशोध्यदलेनयुग्वा॥१॥खगोनलग्नद्व्यनुषङ्गः॥शेषंस्फुटम्।आचा
र्योक्तप्रकारेत्रिंशताऽपवर्त्तंकृत्वास्योपपत्तिस्तान्त्रिकैरूह्या।विस्तरभयादस्माकमनुद्योगः॥श्रीपतिपद्धतौशुभग्र
हस्यरूपाल्पहरेसत्वर्द्धह्रसतीतिबृहज्जातकोक्तेहरार्द्धरूपाच्छोध्यम्।यथास्थितहरोनरूपंहरार्द्धयुक्तंवागुणो
भवतीतिद्रष्टव्यम्।अतएवाहदामोदरः।रूपाल्पकोर्द्धितोहारस्ततोरूपाद्विशोधयेदिति।हरखण्डेनसंयुक्तोगु
णकःसगुणोऽथवेतिच।आदिशर्मणात्वज्ञातहानिकर्मणालग्नेशुभोनितेहारगुणौद्विनिघ्नावितिवदताहरोनरूपं
द्विगुणंगुणोभवतीतिस्वीकृतंतदसत्।लग्नराश्यादिसमेपापेसौम्येवान्तराभावाद्धान्यभाववृद्धिहालिकोपिप्रति
पद्यते।तत्रपापस्यहरःशून्यमितिरूपंगुणस्तेनदायांशानांगुणनेदायांशाएवभवन्तीतिनकापिहानिः।शुभस्यहरे।

द्विनिघ्नइतिरूपद्वयंगुणस्तेनदायांशगुणनेद्वैगुण्यंभवतीतियत्किंचिदेतत्।हानिगुणकेनगुणनेहानिरेवभवितु
मर्हतिनवृद्धिरितिबालोपिजानाति। एवमन्यत्रापिव्यभिचरतीतिपरिहार्योयंपन्थाः।यदप्यायुष्मताखगोनलग्नष
ड्भाल्पंकुहृतंहरोभवतीतिउक्तंतदप्यसत्॥तत्रराशयोधोद्विघ्नलवादिनायुक्ताहरोभवतीतिध्येयम्।यदपिगणेश
नाम्नाद्विघ्नहरोनंरूपंगुणःस्यादित्यभिहितंतदपितुच्छम्।कदाचिद्विघ्नहरस्यरूपादप्याधिक्यलाभेनरूपाच्छुद्ध्यसं
भवात्।रूपमेवतस्माच्छोद्ध्यमितियदितथापिव्यभिचरतीतिधूलीकर्मणाप्रदर्शनीयम्।यत्तुभाववशाद्दिशर्मणा
चक्रार्द्धहानिःस्वीकृतातदसदितिप्राचोक्तंतदप्यसङ्गतम्।तद्भूम्येतेनतथानङ्गीकारात्।सूर्येणक्षीणचन्द्रोत्रपाप
इत्युक्तंतदपिपद्धतिकारविरोधादयुक्तम्।प्रकृतमनुसरामः॥अथांशायुर्दायसाधनमाह॥ ॥ दायांशोत्थक
लाःस्वयोग्यगुणकघ्नाःस्वाभ्रनेत्रोद्धृताअंशायुर्दुसदांसमादितुतनोर्दायांशकास्माहताः॥दिग्भक्ताश्च
समादिचेत्तुबलवल्लग्नंतदालग्नभैस्तुल्याब्दैस्सहितंद्विनिघ्नशरहृद्भागादितोमासयुक्॥२०॥ यथाप्रा
क्चक्रार्द्धहानिसंस्कृतदायांशानांकलाःस्वकीयकर्मयोग्यगुणकेनगुणिताद्विशत्याभक्ताःफलमंशायुर्वर्षादिंभ
वति।अयमभिसन्धिः।दायांशकलाद्विशत्याभक्तालब्धंवर्षाणिस्युः।शेषंसविकलंद्वादशभिःसंगुण्यविकलास्याना

स्यषष्ट्याप्तंकलासुसंयोज्यद्विशत्याभक्तेमासाः।पुनःशेषंसावयवंत्रिंशतागुणयित्वाविकलातःषष्टिलब्धमुपरिप्र
क्षिप्यशतद्वयेनभागे गृहीतेदिनानिस्युः।पुनःशेषंषष्ट्यानिहत्याधःस्थाङ्कयुतंद्विशत्याभजेल्लब्धंघटिकाभवेयुरेव
मग्रेपि।लग्नस्यदायांशास्त्रिगुणाःप्रोक्तरीत्यादशभिर्भाज्यावर्षाद्यंलग्नायुर्भवेत्।यदितुषड्रूपाधिकबलंलग्नंतदा
लग्नराशितुल्यवर्षैर्युक्तंकार्यम्।लग्नभागादेर्द्विगुणस्यञ्चभिराप्तेनमासादिफलेनमासादौचैयुक्तंकार्यंतल्लग्नायुः
स्पष्टंभवति।यदालग्नबलंषड्रूपाल्पंतदानींदायांशास्त्रिगुणादशभक्ताएवलग्नायुःस्यादितितात्पर्यार्थः।बलवल्ल
क्षणंत्वल्पेहीनबलोबलीषडधिकइत्यग्रेवक्ष्यते।ग्रहायुःसाधनवासनायद्येकनवांशकलाभिर्द्विशतमिताभिः२००
रेकंवर्षंतदेष्टदायांशकलाभिःकिमित्यनुपातेनसुगमा।दशभिरंशैस्त्रयोनवांशास्तत्तुल्यान्येववर्षाणीतित्रीणिवर्षा
णिभवन्ति।अथानुपातः।यदिदशभिरंशैस्त्रीणिवर्षाणितदेष्टलग्नदायांशैःकानीत्यतउक्तंतनोर्दायांशकास्त्र्याहतादि
ग्भक्ताद्इतिवीर्यान्वितराशिसमंचहोरेतिबृहज्जातकोक्तेर्लग्नभैस्तुल्याब्दैःसहितमित्युपपन्नम्।ततोनुपातः।यदि
त्रिंशदंशैर्द्वादशमासास्तदेष्टलग्नभागैःकिमिति।अत्रगुणहरौषड्भिरपवर्त्यलब्धंगुणोद्वौ२हरेपञ्च५अतोद्विनिघ्न
शरहृदित्याद्युपपन्नम्॥ ॥अथपिण्डनिसर्गजीवशर्मायुर्दायोपयोगिभूतान्दायांशान्साधयति॥ ॥ स्वोच्चोनो

प्रौ·म·
९९

द्युचरोङ्ग·भात्समधिकोग्राह्योल्पकोनार्कभं१२ तद्भागाद्युचरोरिभेयदिगुणांशोनाविनावक्रगम्।ह्या
प्ताअस्तमितेविनाशनिसितौहानिद्वयेत्राधिकौकार्योपिण्डनिसर्गजीवगदितेचक्रार्द्धहानिर्भवेत् ॥
॥२१॥ स्वोच्चेनोनोग्रहोयदिषड्राशिभ्योऽधिकस्तदास्यभागाः कार्याः।यदिषड्भाल्पस्तदातंद्वादशभ्योविशोध्यभा
गाः कार्याः।वक्रगंनीचासन्नभावेनवक्रगतिंप्राप्तंग्रहंभौमादिपञ्चकान्यतमंविहाययद्यरिभेस्वाभाविकशत्रुराशौ
ग्रहः स्यात्तर्हितेतदीयाभागानिजचतुर्थांशेनहीनाः कार्याः वक्रीग्रहः शत्रुराशावपित्र्यंशंनापहरतीत्यर्थः।अत्रके
चिट्टिप्पणकाराआरोवक्रः क्रूरदृक्कावनेयइत्यभिधानाद्धित्वावक्रंरिपुगृहगतैर्हीयतेस्वत्रिभागइतिवराहोक्तौव
क्रशब्देनभौमंव्याख्यायतत्स्वरसाद्वक्रगमित्यत्रापिभौमंव्याचक्षतेतद्बहूनामसंमतत्वादुपेक्ष्यम्।ज्ञानराजसुतसू
र्योपि।आरोवक्रोवक्रचारोमहीजइतिभौमनामानिस्वेच्छयाप्रकल्प्यवक्रचारगइतिश्रीपत्युक्तौवक्रचारगोभौमइ
तिव्याख्यातवान्।तदपिस्वच्छन्दंप्रवर्तमानस्यैकदेशिनोमतमुपेक्ष्यमेव।बृहज्जातकटीकायांहित्वावक्रमित्यस्य
व्याख्यावसरेभट्टोत्पलेनाप्युक्तम्।वक्रंविपरीतगतिंहित्वावर्जयित्वायोग्रहोरिपुगृहगतः शत्रुक्षेत्रगतोभवतितेन
स्वादाग्रुषस्त्रिभागोहीयते।एतद्बहूनांमतम्।आचार्यस्यपुनरेषएवपक्षोभिमतः।अन्यथाहित्वाभौममित्याचक्षेत।

राम:
९९

अतएवज्ञायते यथावक्रगोग्रहआयुर्दायंसबलत्वात्त्रिगुणंददातितथात्रापिनापहरतीतिनिश्चयइति।कथंपुन
र्वक्रिणंविहायेतिपक्षस्यबहुसंमतत्वमितिचेत्।पश्य।श्रीधरः।वक्रचारंविनात्र्यंशंशत्रुराशौहरेदूहइति।श्रीपतिर
पि।त्र्यंशकंहरतिशत्रुभेग्रहःस्वायुषोत्रनतुवक्रचारगः॥दामोदरोपि।विनावक्रगतिंहरेच्च।निजायुषस्त्र्यंशमरेर्गृह
इति।होरामकरन्दे।त्र्यंशंहरन्त्यकुटिलारिपुराशिसंस्थाइति।बृहज्जातकेपि।हित्वावक्रमित्यत्रवक्रमस्यास्तीति
वक्रः अर्थआदिभ्योऽच् वक्रिणंहित्वेतिव्याख्येयम्।प्रामाणिकैः श्रीधरादिभिराचार्यैर्गर्गपराशरबादरायणदेवला
दिपद्धतयस्तज्जातकानिचसंपूर्णानिदृष्टान्यासन्नतस्तैर्यदुक्तंतत्सर्वंसमूलमेव।यत्तुबृहज्जातकटीकायांनचा
वनिसुतस्त्र्यंशंशत्रुक्षेत्रगतस्तथेतिगर्गवाक्यंयदपिचभूम्याःपुत्रंवर्जयित्वारिभस्थाहन्युःस्वात्स्वादायुषस्तेत्रि
भागमितिबादरायणवाक्यंतदुभयमप्यंशायुःप्रकरणेऽभिहितत्वादंशायुर्विषयमेवेतिबोध्यम्।पराशरेणशत्रुक्षे
त्रगतस्त्र्यंशमितिवदताभौमंविहायेतिनोपात्तम्।तथालघुजातकसारावल्यादावपिनोक्तमेवंमतभेदेपराशरमत
मेवबहुसंमतत्वादंशायुष्याहृतमाचार्यैरित्यपिध्येयम्।अस्तम् इतेप्राप्तेग्रहेतेदायांशाद्विभक्ताःकार्याः।शनिशु
क्रावस्तंगतावप्यर्द्धंनापहरतः।अत्रत्र्यंशार्द्धहानिद्वयेप्राप्तेऽधिकार्द्धहानिरेवकार्यानहानिद्वयम्।अनेनहानिद्वये

ग्रो॰ म॰ ७०

पिद्वितयंविधेयमित्यधुनातनोक्तंपरास्तम्।गर्गः।ध्रुवायहानिःकर्तव्याततोन्यासुबहुष्वपि॥प्राप्तास्वेकैवकर्तव्या
यास्यात्तासुमहत्तरा।यवनः।खेचरोजायतेयोर्द्धंत्र्यंशयोरपहारकः॥आयुषःसहरेदर्द्धंत्र्यंशंशुक्रशनैश्चरौ।ननुध्रु
वायहानिःकर्तव्येत्यादिगर्गवाक्यस्यांशायुःप्रकरणेपठितत्वादनेनांशायुष्येवसकृद्धानिरुक्तानपिण्डाद्यायुषि।
किंचानिस्कृष्टार्थप्रतिपादकैर्वराहश्रीधरश्रीपत्यादिभिराचार्यैःपिण्डाद्यायुर्दायेषुसकृद्धानिर्नाभिहिता।तस्माद्द्वितो
र्हानिद्वयेप्राप्तेऽधिकैकाहानिःस्यादितियदुक्तंतदयुक्तम्।नचाचार्यकल्पंतुबहुघ्नतायामेकंतुयद्भूरितदेवकार्यमित्य
स्यव्याख्यावसरेशत्रुक्षेत्रस्थोनीचस्थश्चयदाग्रहोभवत्यस्तंगतोवातदासकृदेवायहानिःकार्यानीचेतोर्द्धंह्रसतीत्य
त्राप्यनुवर्तनीयम्।इतिभट्टोत्पलोक्तेःसकृद्गुणननियमनैयम्येनसकृद्धानिरपिस्वीक्रियतामितिवाच्यम्।त
थासतिनीचस्थेग्रहेशत्रुक्षेत्र गते स्तमितेवासकृदर्द्धहानिरेवस्यान्नत्र्यंशहानिर्नापिद्वितीयार्द्धहानिरितिप्र
सज्येत।तत्रयथाभवद्भिर्द्वीयांशसाधनेनैवनीचस्थत्वनिबन्धनामर्द्धहानिंविधायपश्चाच्छत्रुराशिस्थेस्त्र्यंशहानि
रस्तङ्गतेऽर्द्धहानिर्वाक्रियतेतद्वदिहापित्र्यंशार्द्धहानिद्वितयेप्राप्ते विनिगमनाविरहाद्धानिद्वितयमपिस्यादि
तिसुन्दरोक्तएवपन्थानितान्तसुन्दरइतिप्रतिभाति॥अत्रवयंतुब्रूमः।खेचरोजायतइत्यादियवनमुनिवाक्येवि

रा॰ म॰ ७०

पचयोभवतीतिनीचादग्निमाअर्वाचीनाश्चराशयः पठितवर्षार्द्धगुणाः षड्भक्ताअथवापठितवर्षगुणाद्वादशभक्ताः
फलंपठितवर्षार्द्धेयोज्यंपिण्डायुःस्यात्। तत्रस्वोच्चोनेषड्भाधिकेषड्भंसंशोध्यशेषंनीचादग्निमराश्यादि तत्पठितवर्ष
गुणंद्वादशभक्तंफलंपठितवर्षगुणितषड्भस्यद्वादशभागात्मकेपठितवर्षार्द्धेयोज्यमितिनीचादग्निमराश्यादेःप्रा
गेवषड्भाशियोगाद्यथास्थितंस्वोच्चोनग्रहचरंषड्भाधिकंगृहीत्वायुःसाधनेनकोपिविशेषइतिबालोपिजानाति। अतः
स्वोच्चोनोग्रहचरोऽङ्गभात्समधिकोग्राह्यइत्युपपन्नम्। षड्भाल्पेतुस्वोच्चोनेतं षड्भाद्विशोध्यशेषंनीचादर्वाचीनराश्यादि
प्रागवदिहापिप्रागेवषड्भयोगात्षड्भाल्पंद्वादशराशिभ्योविशोध्यग्राह्यमित्यपियुक्तम्। अस्यस्वोच्चोनषड्भाधिकग्र
हस्यराश्यादिपठितवर्षगुणंद्वादशभक्तंकार्यंतत्राचार्येणांशाएवकृताअतस्तद्भागाःपठितवर्षगुणाभगणांशैर्भा
ज्याइत्युपपन्नम्। अतएववक्ष्यते। दायांशाःस्वगुणेर्हताहिभगणांशा ३६० प्ताःसमादिपिण्डायुरिति। त्र्यंशार्द्धहानि
वासनाहोरागममूलेव। अंशायुषिवक्रगतिग्रहस्यसबलत्वेनायुषस्त्रिगुणितत्वादिहापिसबलत्वान्नत्र्यंशहानि
रुचिता। अतोविनावक्रगमितिसाधु। सूर्येणशत्रुणास्तमितयोरपिशनिशुक्रयोर्वैराभिनिवेशनेनैवायुर्हानिरित्य
पिसुष्ठूक्तम्। पूर्वोक्तंचिन्तयेत्सर्वमितिसारावल्यामुक्तत्वाच्चक्रार्द्धहानिःकार्येत्यपिसुष्ठूक्तम्। अत्रारिभइतिसामा

शिष्यत्र्यंशहान्यसंगतत्वनिबन्धनार्द्धहान्योर्निर्णयस्योक्तत्वात्तद्धानिद्वयेप्राप्तेऽधिकार्द्धहानिरेवस्यान्नहानिद्वय
म्।नीचस्थत्वनिबन्धनार्द्धहानौप्राप्तायांतथारिभस्थितत्ववशात्तृतीयेलिप्त किरणत्वाद्धापरहानौचप्राप्तायांसत्त्व
द्धानिनिश्चायकवचनाभावाद्धानिद्वयेनकिंचिद्बाधकम्।अतोहानिद्वयेत्र्यधिकैकेतिसर्वमवदातम्।खेचरोजा
यतइत्यपिवचनमंशायुर्विषयकमितिप्राञ्चः।तन्नचतुरस्रंप्रमाणाभावात्।केशवतःपरमप्राचीनेनभट्टोत्पले
ननेदंयवनवचनंदृष्टमतःकेशवदृष्टमिदंवचनंशककालप्राचीनयवनस्यनभवतीत्यप्याहुः।तदयुक्तम्।भट्टो
त्पलेनपराशरजातकंनदृष्टमस्माभिस्तुकिंचित्पराशरजातकंदृश्यतेतत्रभट्टोत्पलादृष्टत्वादिदंपराशरीयजात
कमेवनभवतीतिवक्तुमशक्यम्।तस्मात्प्रामाणिकैःश्रीकेशवसांवत्सरैर्दृष्टंयवनवचनंभवत्येव।अथवितिं।अ
थोद्वत्यानन्तर्ये।मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथोअथेत्यमरः॥चक्रार्द्धहानिर्भवेत्।पूर्वानीतस्वकीयचक्रार्द्ध
हानिगुणेनदायांशागुणनीयादित्यर्थः॥अथादितउपपत्तिः॥बृहज्जातके।मयपवनमणित्थशक्तिपूर्वैर्दिवसकरा
दिषुवत्सराःप्रदिष्टाः॥नवतिथिविषयाश्विभूतरुद्रादशसहितादशभिःस्वतुङ्गभेषु॥१॥नीचेतोऽर्द्धह्रसतिहितत
श्चान्तरस्थेनुपातइति।उच्चेपठितमायुर्नीचेपठितमर्द्धमायुस्तस्मान्नीचादग्रतोवीगपिषड्राशिभिःपठितवर्षार्द्धस्यो

सताशुभग्रहेणदृष्टस्तर्हिअर्द्धयाआष्याउनाःकार्याः।अत्रशुभाश्चन्द्रबुधगुरुशुक्राः।अथापरइति।अथशब्दोम
तान्तरसूचनार्थः।ग्रहाणांदायांशाउच्चोदयभावजेननिघ्न्याआष्याऊनाःकार्याः।उदयोलग्नंतदुदयभावात्तनु
भावाज्जायतेतदुदयभावजमर्थात्फलम् ग्रस्योदयभावजंतेन लग्नवर्तिक्रूरस्यलग्नोत्पन्नारोहावरोहफ
लेनाप्तिर्गुणनीयेत्यर्थः।सौम्यदृष्टेतुलग्नगेक्रूरेउच्चोदयभावजेननिघ्न्याईयाआष्योनाःकार्याः।ननुयदिद्वित्राः
पापग्रहालग्नेस्युस्तदाकस्यभावफलेनगुणनीयेत्यतआह।तनुगोग्नोचेद्बलिष्ठस्येति।षष्ठ्यंशमात्रबलेनाप्य
धिकबलशालिनइत्यर्थः तनौलग्नेगच्छतस्तौतथातौचतावुग्रौचतनुगोग्रौ।अत्रद्वित्वंत्रित्वोपलक्षकं।बलसा
म्येविनिगमकाभावाद्घ्यादिफलप्राप्तेगुणनंनिषेधति।तत्साम्येपुष्टफलेनेत्यनेन।तत्साम्येपुष्टफलेनाधिका
रोहावरोहफलेनबलफलसाम्येतुद्व्यादिफलगुणंनमर्थात्सिद्धम्।अपरेह्याल्लुगिरामकृत्सादय इतिवदन्ती
त्यध्याहारः।एवमैकदेशिमतमनूद्यदूषयति।नेतीति।इतिउक्तंयत्परमतंतन्नरमणीयंनेत्यर्थः।लग्नगेक्रूरेल
ग्नेशेइयंहानिःकार्यानवेत्याकाङ्क्षायामाह॥तनुपेस्मिन्निति।अस्मिन्लग्नगेक्रूरेतनुपेलग्नेशेसतिअसौहानिरू
पाक्रियाकार्या।अन्यंविशेषमाह॥नांशजेसौक्रियेति।स्पष्टम्।असौक्रियेतिकाकाक्षिगोलक न्यायेनोभयत्रसंब

न्यतो निर्देशात्स्वाभाविकशत्रुरेव ग्राह्यो न तात्कालिकशत्रुः। यतस्तथा सति कदाचिदधिशत्रुरपि संभवति। तद्राशाव
पि प्रागवद्धानिविशेषेण भाव्यं। हानिस्तु नाभिहिता तो यद्व्याख्यातं स्वाभाविकशत्रुभ इति तत्सर्वं समीचीनमेव। नचा
धिशत्रुरपि शत्रुर्भवत्येवेति तद्भेपि त्र्यंशहानिरिति वाच्यम्। अप्रयोजकत्वाद्बहूनामसंमतत्वाच्च॥ ॥अथ लग्ने क्रू
रे हानिमाह ॥ ॥ दायांशा द्युसदां पृथक्तनुलवादिघ्नाः खषट्‌भ्युद्धृता आप्यो नास्तनुगे खले च यदि सद्दृष्टे द्व्ययाथापरे॥ निघ्नो ग्रोदयभावजेन तनुगो गैश्चेद्बलिष्ठस्य तत्साम्ये पुष्टफलेन नैति तनुपे स्मिन्नां
शजे सौक्रिया॥२२॥ द्युसदां ग्रहाणां दायांशा अनन्तरानीता यथा प्राप्तचक्रार्द्धहानिगुणितास्ते पृथक्स्थाप्याः। त
नोर्लग्नस्य राशीन पहायांशादिना गुण्याः षष्ट्यधिकशतत्रयेण भाज्याः आप्या लब्धेनांशादिना पृथक्स्था हीनाः कार्याः।
तनुगे लग्नगे खले क्रूरग्रहे सति। अत्र क्रूराः सूर्यभौमशनय एव। यत आह बादरायणः। सूर्याङ्गारशनीनामेकस्मिं
ल्लग्ने भवति हानिः। विधिना त्वनेन सौम्येक्षिते दलं पातयेल्लब्धात्॥ लब्धाद्दलं लब्धस्यार्द्धं पातयेदित्यर्थः। आयुः पि
ण्डादिति शेषः। यदा शुभः क्रूरश्च द्वावेतौ लग्ने भवतस्तदापि क्रूराक्रान्तत्वनिबन्धना हानिः स्यादेव। यदाह पराशरः।
तिष्ठतः शुभपापौ चेत्पापोदयविधिः स्मृत इति। एतदर्थलाभार्थमेव चशब्दोपादानमत्रेति बोध्यम्। यदि लग्नस्य खलः

ध्यते।यद्वा।नेतितनुपेस्मिन्नित्यत्र अस्मिन् लग्नगेक्रूरेतनुपेसति असौहानिर्नकार्येत्यपरेवदन्तीतिव्याख्येय
म्।अत्रोपपत्तिः।बृहज्जातके।सार्द्धोदितोदितनवांशहतात्समस्ताद्भागोष्टयुक्तशतसंख्यउपैतिनाशम्।क्रूरेविल
ग्नसहितेविधिनात्वनेनसौम्येक्षितेदलमतःप्रलयंप्रयाति॥अर्द्धशब्दःखण्डवाचकस्ततोर्द्धेनखण्डेनोदितोर्द्धो
दितस्तेनसहवर्तमानाःसार्द्धोदिताःसावयवाइत्यर्थः।सार्द्धोदिताउदिताश्चतेनवांशाश्चतैर्हतात्।अत्रलग्नन
वांशेतित्यक्त्वोदितनवांशोत्थपादानंलग्नस्यराशीन्विहायशेषभागानांकलाःशतद्वयेनभाज्यालब्धंसावयवनवां
शाइत्येतदर्थम्।उत्पलस्तु।लग्नंराश्यादिकंलिप्तापिण्डीकृत्यशतद्वयेनभागमपहृत्यावाप्तंभचक्रस्यतावन्तो
नवांशाउदिताः।यश्चार्द्धोदितनवांशःसतत्रोदितनवांशसमूहेयोज्यः।एवंकृतेसार्द्धोदितोदितनवांशसमूहोभ
वतीतिव्याचख्यौ।तन्नश्रद्धेयम्।यस्माद्बादरायणः।लग्नांशलिप्तिकाभिर्हतायुर्भजेच्चक्रलिप्ताभिः।कल्याणशर्मा।ल
ग्नांशलिप्तिकाहतखेत्यादि।श्रीधरः।लिप्तीकृतैर्लग्नभागैर्दीर्घायान्हन्यादिति।गुणाकरोपि।लग्नस्थेखलखेचरेतनुल
वाप्त्योमौकसामिति।दामोदरः।क्रूरायहानिश्चततोत्रराशीन्विहायलग्नस्यलवादिकेनेति।आदिशर्मा।पृथक्स्थं
खेटायुस्तनुलवहतमिति।विश्वनाथोपि।तनुगखलेखेटदायाःपृथक्तन्वंशादिघ्नाइत्यादि।अत्रसर्वत्रांशपर्यायप

दपर्यन्तधावनस्यलग्नराशीन्विहायांशाग्राह्याइत्यत्रैवतात्पर्यम्।अन्यथालग्नलिप्तिकाभिर्हत्वेत्याद्युक्तंस्यात्।अत
एवतेनोक्तमन्येत्वेवंव्याचक्षतइत्यादिनेतदपिसमूलमित्यन्तेन।यत्तु।कुम्भलग्नस्याद्यांशकउदयेआदित्यचन्द्रशु
क्राःपरमोच्चेबुधजीवशनैश्चराःपरमनीचेभौमश्चकुम्भेष्टाविंशतिभागइत्यस्मिन्नुदाहरणेलग्नस्यभुक्तनवांशशू
न्यत्वेनपापग्रहभौमसंबन्धनिबन्धनहान्यभावेपियदृच्छयाहानिंग्रहायुर्दायेषुकृत्वासार्द्धपञ्चदशवर्षतुल्यम
एभ्यऊर्ध्वेविंशतेरधस्तादायुरानीयचविंशतेरधस्तादायुर्नस्यादितिवराहोक्तमयुक्तमित्युक्तं तदयुक्तमितिबोध्य
म्।चक्रस्योदितनवांशाग्राह्याइत्यस्मिन्पक्षेपिलग्नस्यदशराशयइतिनवतिनवांशाभुक्तास्तस्मादेकनवतिनवां
शभुक्ताइत्युक्तंतदप्यसंगतम्।लग्नगतनवमांशस्यभुक्तत्वात्।तस्मान्नायुर्विंशतेःस्यादधस्तादितियुक्तमुक्तंवरा
हमिहिराचार्यैः।यद्वा।विंशतेरधस्तादायुरुदाहरणान्तरेभवतुनास्माकमत्राग्रहस्तथापिभट्टोत्पलप्रदर्शितविंशत्य
ल्पायुर्दायोदाहरणमसदेवेतिब्रूमः।किंचावक्रितःपुनःशत्रुक्षेत्रगतोपिनापहरति।एतद्बहूनांमतमितिपूर्वमुक्तंप
श्चादङ्गारकस्यशत्रुक्षेत्रगतस्यापिनपततीत्यभिहितमतःपूर्वापरग्रन्थविरोधोपिदूषणम्।यदपिचोक्तम्।परमोच्च
गतानांपरमनीचगतानांचशत्रुक्षेत्रस्थत्वात्र्यंशोस्तंगतानामर्द्धंचनपात्यते।यतोनिमिषपरमांशकेविलग्नइत्यत्रतु

षस्यस्य चन्द्रस्य शत्रुक्षेत्रस्थत्वेन त्र्यंशहानौ कृतायां परमायुर्न प्राप्नोतीति। तदपि मन्दम्। यवनमते न शुक्रस्य चन्द्र
शत्रुत्वेपि सत्यादिमतेन स्वाभाविकतत्कालमित्रामित्रप्रकाराभ्यां सममित्रत्वोपलम्भेन अंशहानेरप्राप्तत्वेन तन्निषे
धस्यान्याय्यत्वात्॥ किंच तत्कालजशत्रुगेहे त्र्यंशहानिवादिमते शुक्रस्य यवनप्रकारेण चन्द्रस्वाभाविकशत्रुत्वेन तत्का
लमित्रत्वेन च समत्वात् त्र्यंशहानिकथनमयुक्तम्। ननु सत्ययवनमतयोर्विरोधे किं ज्यायः। उच्यते। बहुसंमतत्वा
त्सत्याचार्यमतमेव प्रमाणमिति। एवमादिभट्टोत्पलेनासकृदुक्तमित्यास्तां तावत्॥ ॥ प्रकृतमनुसरामः॥ ॥ ल
ग्नप्रान्ते ग्रहायुर्द्वादशांशतुल्या परमा हानिर्लग्नादौ तु हान्यभावस्तत्र नवांशानामपि परमत्वाभावात्ततो नवांशे
भ्यः साधनमुचितं हान्याः। तत्र नवांशानयनार्थमनुपातः। यदि कलानां द्विशत्या २०० एकोनवमांशस्तदेष्टविरा
शिलग्नकलाभिः किमिति। अन्योप्यनुपातः। यदि नवभिर्नवमांशैरायुर्द्वादशांशतुल्योपचयस्तदेष्टनवांशैः कि
मिति। अनन्तरोदीरितत्रैराशिके द्वादशनवघातं हरं १०८ कृत्वाष्टयुक्तशतसंख्यो भागो हीयत इति सम्यगुक्तम
त्र भवद्भिर्वराहमिहिराचार्यैः। एनमपि हरं १०८ द्विशत्या संगुण्य निष्पन्नचक्रकलातुल्यहरेण २१६०० युर्दी
पं लग्नांशकलाहतं भजेदिति बादरायणकल्याणवर्मश्रीपत्यादिभिरप्युक्तमुक्तम्। श्रीकेशवसांवत्सरैस्तु

लग्नस्यकलास्थानेंऽशा गृहीतास्तथा चक्रकलास्थाने चक्रांशा गृहीता अतो यदुक्तं तत्सम्यगेव। श्रीपत्यादिभि
र्दायांशजनितवर्षाद्यायुष एष ह्रासोऽभिहितोऽत्र तु तद्धेतोरिति न्यायेन दायांशानामेव ह्रासो विहित इति युक्तमु
त्पश्यामः। अयं ह्रासो दायांशेभ्यो विशोध्यो तआ ष्योनादिति साधु। स दृष्टेर्द्वयेत्यत्रागम एव प्रमाणम्। अथ परमतवा
सनोच्यते॥ उग्रग्रहस्य लग्नभावफले संपूर्णे प्रोक्तहानितुल्या हानिर्भावफलाभावे हान्यभावः। अन्तरा त्रैराशि
केन हानिसाधनं न्याय्यं तत्रेदं त्रैराशिकम्। रूपमितेन संपूर्णेन क्रूरलग्नभावफलेन प्रोक्ता हानिर्लभ्यते तदेष्टे
न किमित्युग्रोदयभावजेन निष्पाद्येत्युपपन्नम्। अत एवोक्तं रत्नावल्याम्। संस्कार एवमुदितो ग्रहजीवितांशसं
शोधने परमभावफलानुसारम्॥ उक्ताल्पके सति च भावफलेऽनुपाताद्ब्रूह्यो बुधैर्विधिरसाविह युक्तियुक्तः॥ १॥ ने
दं युक्तं मन्यामहे। गर्गपराशरबादरायणाद्यनुक्तत्वाद्वराहाद्याचार्यैरनुक्तत्वाच्च। किंच यद्येवं युक्तिबलात्स्वीक्रिये
त तदा लग्नगक्रूरं प्रति शुभस्य संपूर्णदृष्टौ भावफलगुणितलब्धेर्दलं शोध्यं न्यूनदृष्टौ तद्दृष्टिगुणितं भावफलघ्नल
ब्धेर्दलं शोध्यं द्वयोः शुभयोर्दृष्टौ बलवद्ग्रहदृग्गुणितं तद्दलं शोध्यं बलसाम्येऽधिकदृष्टिगुणं तद्दलं हेयमित्याद्यपि प्र
सङ्गो भूयानापद्येत। तस्माद्यत्किंचिदिति॥ ॥ अथ यो यो भावः स्वामिदृष्टो युतो वा सौम्यैर्वा स्यात्तस्य तस्यास्ति वृद्धिरि

तिस्वामियोगस्यशुभत्वाभिधायकत्वात्सनहानिकरोभवतीतिलग्नगेक्रूरेलग्नेशेप्यसौहानिःकार्येतियत्व्या
ख्यातंतन्नविचारपदवीमारोढुमर्हतीति। अत्राहुः॥ योयोभावइतिवाक्येभिन्नविषयकेसत्यपियदिहानिर्नस्वी
क्रियतेतदासिंहराशिपतावपिरवौसिंहस्यैवराहाद्युक्तंनिशान्धत्वंदत्तजलाञ्जलिस्यात्। तत्रयथासिंहसंस्थे
निशान्धइतिवाक्येननिशान्धत्वंदुष्परिहरंतद्वदिहापिलग्नगेक्रूरेलग्नपतावपिवाक्यादियंहानिर्दुष्परिहरैव।
किंचैवंयुक्तिसंचारेक्रूरेसौम्येचग्रहेलग्नस्थेसाम्यादेषाहानिर्नस्यात्। अपिचलग्नस्थेक्रूरेशुभदृष्टेपापदृष्टेचशु
भाशुभत्वसाम्यात्संपूर्णैवहानिःस्यान्नतदर्धहानिरित्यादिकोभूयानतिप्रसङ्गः प्रसज्येतेति॥ वस्तुतस्तुलग्नेक्रू
रेयदेषालग्नायुष्येवहानिरुक्तास्यात्तदातस्मिंल्लग्नेशेयोयोभावइतिवाक्यबलाद्धान्यभावोपिस्यात्। बृहज्जात
केसार्द्धोदितोदितनवांशहृतेत्यादिवाक्यस्यग्रहायुर्हानिप्रकरणेपठितत्वात्सारावल्यांविहगायुषेतिव्यक्तत्वाच्छ्रीधरेणापिलब्धंवर्षादिकंशोध्यंग्रहाणांतन्निजायुषीत्युक्तत्वाच्चग्रहायुष्येवायंह्रासोनलग्नायुषीतिलग्ने
गेक्रूरेलग्नपतावपिग्रहायुर्हानिकरणेनकिंचिद्बाधकमितिस्वामियोगस्यशुभत्ववादिभिःपरैरप्यवश्यमास्थेय
म्। पराशरहोरायामपिहानिःकार्येत्येवोक्तमतोयदुक्तमाचार्येणतन्नुपेक्ष्मिन्नसौक्रियेतितदार्षशास्त्रसंमतंयुक्ति

युक्तं च। अतएव सुन्दरमिश्रैरप्येवमेवोक्तम्। क्रूरेतदीशेपि मतैवह्वानिरितिायस्त्वाचार्यटिप्पण्याम् अन्यादृशव्याख्यानं तल्लेखकदोषात्पतितमित्यादि गतिश्चिन्त्या। क्रूरोदये योपचयः स नात्रांशायुषीत्युक्तत्वान्नांशजे सौक्रियेतिसर्वमवदातम्। यत्तु श्रीपतिपद्धतिटीकायामंशायुर्दाय स्तुलग्नबलाधिकत्वादेवोत्पद्यते तत्र क्रूरयोगाद्धानिर्युक्तैवेतिवासनां वदता सूर्यैर्णांशायुष्येषा ह्वानिरिति स्वीकृतं तदनेनपरास्तम्। यदपि च वासनानभिज्ञतया चक्रकलाभिरायुर्दायो लभ्यते तदा लग्नकलाभिः किमित्यभिधायि तदप्यसदेवेति बोध्यम्॥ एवं दांशा... भिधायाधुना पिण्डनिसर्गजीवशर्मायुर्दायानयनमाह॥ ॥ गोब्धास्त्रत्वतिथिप्रभाकरतिथिस्वर्गा नखाः पैण्डजे नैसर्गे नखभूद्विगोधृतिनखाः पञ्चाशदर्का द्रुणाः। दायांशाः स्वगुणैर्हताद्विभगणांशाप्त्यासमाद्यायुषी स्वर्गाप्ताश्च समादिजेवमिभहृत्त्वांशैर्घटीषन्वितम्॥ २३॥ अर्कादितिल्यब्लोपेपञ्चमी। अर्कमारभ्येत्यर्थः॥ अत्र समादिपूर्वोक्तरीत्याग्राह्यम्। शेषंस्पष्टम्। स्वर्गाप्ताद्दति। सर्वेषां ग्रहाणां दायांशा एकविंशत्याभक्ता लब्धं वर्षादि जीवशर्माचार्यमते आयुः स्यात्॥ तद्रूपादिदायांशेभ्योष्टभक्तेभ्यो लब्धघटीमुखेन युक्तं कार्यमित्यर्थः। पिण्डायुर्वर्षादिसाधनोपपत्तिः प्रागुक्ता। नैसर्गिकेपि दायांशवर्षाद्यानयनयुक्तिः सैव। एवमेव प्रकर्तव्ये जीवशर्मोक्त चन्द्रज इति सारावल्यामुक्तेश्चक्राद्ध्हा

न्यादिकमत्रापिकार्यमित्युपपन्नम्।अथजैवेयुक्तिः।जीवशर्मा।सप्तदशैकोद्वियमावसवोवेदाग्नयोग्रहेन्द्राण
म्।वर्षाण्युच्चस्थानांनीचस्थानामतोर्द्धंच।मध्येत्वनुपातात्त्यादानयनंशेषमत्रयत्किंचित्।पिण्डायुषएवका
र्यंतत्सर्वंगणिततन्त्रज्ञैरिति।।अतस्तएवहानिसंस्कृतादायांशाअत्रापिग्राह्याइत्युपपन्नम्।उच्चस्थेद्युचरेदा
यांशाभगणांशमितास्तत्रायुःपरमंपरमायुरंगांशतुल्यंपरमायुस्तुसपञ्चदिनंविंशत्यधिकंवर्षशतम्।
१२०।०।५।०।० अत्रपञ्चदिनानित्यक्त्वाशेषमायुः १२० परमायुष्ट्वेनतत्कृतम्।अतोनुपातः।।यदिभगणांशमि
तैर्दायांशैः ३६० परमायुःसप्तमांशा १२०/७ तुल्यमायुस्तदेष्टैःकिमिति।अत्रहरघातोहरः २५२० गुणाः १२० एतौ
गुणेनापवर्त्यप्राप्ताएकविंशतिर्हरे २१ अतोदायांशाःस्वर्गोप्तावर्षादिजैवमायुरित्युपपन्नम्।।अथपञ्चदिनेभ्य
आयुःसाधनार्थमन्योनुपातः।यदिभगणांशैः ३६० पञ्चसप्तमांशा ५/७ आयुस्तदेष्टैःकिंलब्धंदिनादिभवति।त
त्रघट्यादिफलानयनार्थमन्योपिषष्टिर्गुणः ६०।।एवमत्रगुणघातोगुणः ३०० हरघातोहरः २५२० गुणहरौगुणे
नापवर्त्यहरेकिंचिदधिकाअष्टौलभ्यन्तेतत्रस्वल्पान्तरत्वादष्टैवोपात्तास्तेनेभहृदित्याद्युपपन्नम्।अत्रैवगु
णहरौषष्ट्यापवर्त्यलवतःशरघ्नाद्विवेदभागाप्तघटीभिराद्यमितिमिश्रैरपिसुष्ठूक्तम्।अथप्रसङ्गात्श्रीपतिकृतप्र

कारवासनोच्यते। तत्र परमायुर्वर्षाणि १२० राशुपञ्चदिनान्येकवर्षेद्विसप्तत्यंशात्मिकानि १/७२ समच्छेदविधिना सं-
योज्य जातं परमायुः। ८६४१/७२ अस्य सप्तमांशोयम्। ८६४१/५०४ अथ भगणांशमितैर्दीयांशैरेतावदायु ८६४१/५०४ स्तदेष्टैः
किमिति। अत्रादिनादिफलानयनाय पुनर्भगणांशा गुणोंकस्तुल्यगुणहारयोरपगमे ग्रहः स्वोच्चहीनैः स चेत्षड्भ्रही-
नो भचक्राद्विशोध्योथ भागीकृतः सन्॥ कुवेदर्तुनागैर्हृतो वेदखाक्षैर्विभक्तो दिनाद्यं भवत्येवमायुरिति प्रकारो नि-
ष्पद्यते। एकदेशिनस्तूच्चस्थे ग्रहे शून्यमितमुच्चग्रहान्तरं स्यात्तदानीमेव परमायुरंशामितमायुर्भवति यदोच्च-
ग्रहान्तरं शून्याधिकं स्यात्तदानुपातः। यदि शून्यमितैरन्तरांशैः परमायु[illegible]लभ्यते तदेष्टग्रहोच्चान्तरभागैः कि-
मिति त्रैराशिकेन वासनां व्यावर्णयन्ति॥ ॥ श्रीमच्छिवगुरुचरणान् प्रणम्य राशौ[illegible]नफलानन्यादेत-द-
युक्तमेवेति यद्वयं वदामस्तद्विद्वांसो विदांकुर्वन्तु। न च शून्यसप्तहरघाते सप्तैव भवन्तीति न खहरत्वमिति वाच्यम्।
खगुणः खमिति पाटीगणितोक्तेः। तस्मादपठितपाटीगणितेन सूर्येण यदुक्तं तत्पाटीगणितानभिज्ञतया यष्टिसाधनं भा-
स्करोक्तं विषुवद्दिवसे व्यभिचरतीति सुन्दरसिद्धान्ते ज्ञानराजोक्तिवत्सत्याख्येयम्। यदप्यायुष्मता शून्यमितैरन्तरांशैर्व-
र्षादि परमायुरंशो लभ्यते तदेष्टैः किमिति त्रैराशिकेण फलं दिनाद्यं भवतीत्युक्तं तदपि फलमन्यजातिमध्येतदितिपा

दीगणितान्ज्ञानादेवेतिबोध्यम्।वस्तुतस्तुदिनादिकमेवफलमायातिपरंतत्रहेतुरपरइतिबहूक्तमित्युपरम्यते।अथै
तेषुसिद्धेषुपिण्डाद्यायुःषुलग्नायुरानयनमाह॥ ॥ स्पाल्लिप्ताःखनखोद्धृताविभतनोर्वर्षादिपिण्डान्त्रिके
लग्नायुः॥ ॥ विभतनोःविराशिलग्नस्य।शेषमुत्तानम्।अत्रोपपत्तिः।बृहज्जातके।होरात्वंशप्रतिममायुःप्रय
च्छतीतिपिण्डायुःप्रकरणेभिहितत्वाल्लग्नभुक्तनवांशतुल्यमायुःसिद्धम्।ततोनुपातः।आभिःकलाभिः २०० चेदेको
नवांशस्तदेष्टविराशिलग्नलिप्ताभिःकतीतिनवांशाभवेयुः॥एकेननवांशेनैकंवर्षंतदे[illegible]वांशैःकियन्तीतिनवां
शसमान्येवायुर्वर्षाणीत्युपपन्नम्।पिण्डायुर्वदेवनिसर्गजीवशर्मोक्तेकर्तव्यइत्युक्तस्तत्राप्येतद्वायुरित्युक्तम्।न
न्वंशायुषिपिण्डायुषिचांशप्रतिमंलग्नायुरितिसर्वैर्जातककृद्भिरुक्तमस्ति।आचार्योक्तप्रकारेणत्वंशायुषिलग्ना
युःपरमंद्वादशवर्षतुल्यंपिण्डायुषिपरमंनववर्षतुल्यमागच्छतितत्रकोहेतुरितिचेत्।शृणुतर्हि।पिण्डायुषिहोरा
त्वंशप्रतिममायुर्ददातीत्युक्तंतत्रनवैवनवांशादितिपरमंलग्नायुर्नवैववर्षाणि।अंशायुर्दायेतुकिंत्वत्रभांशप्रति
मंददातीत्यभिहितंतत्रभपदोपादानस्येदंतात्पर्यंलग्नंयस्यराशेर्नवमांशेवर्ततेसराशिर्मेषादेर्यावत्संख्योभवति
तावन्तएवाब्दाइति।अतोंशायुषिपरमंलग्नायुर्द्वादशवर्षाणीतिसिद्धम्।अंशायुषिवीर्यान्वितराशिसमंचायुःप्रय

